# देवप्रयागस्थश्रीरघुनाथमन्दिरस्य वास्तुशास्त्रीयाध्ययनम्

**-डॉ. सुरेशशर्मा**
राष्ट्रियसंस्कृतसंस्थानम्
श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः

**देवप्रयागस्य पौराणिकमहत्त्वम् -**

उत्तराखण्डः देवभूमिः ऋषीणां तपोभूमिः चास्ति। पुराणोक्तहिमालयस्य पञ्चखण्डेषु कूर्मांचलः केदारखण्डश्चेति द्वे खण्डे उत्तराखण्डराज्ये स्तः -

**खण्डाः पञ्च हिमालयस्य कथिताः नेपालकूर्माञ्चलौ।**
**केदारोऽथ जालन्धरोऽथ रुचिरः काश्मीरसंज्ञोऽन्तिमः।।**

केदारखण्डः गढवालक्षेत्रमपि कथ्यते। धार्मिकदृष्ट्या केदारखण्डस्य विशिष्टं स्थानं सम्पूर्णेऽपि भारतवर्षेऽस्ति। अस्मिन् खण्डे पञ्चकेदाराः (केदारनाथः, तुंगनाथः, रूद्रनाथः मध्यमाहेश्वरः, कल्पेश्वरश्चेति) पञ्चबद्री, बद्रीविशालः गोपेश्वरः पञ्च-प्रयागादीनि प्रसिद्धानि तीर्थस्थानानि सन्ति।

एतेषु तीर्थस्थानेषु देवप्रयागस्य विशिष्टं स्थानमस्ति। देवप्रयागः पञ्चप्रयागेष्वन्य-तमोऽस्ति। स्थानमिदं पौराणिकं तीर्थस्थानमस्ति। स्कन्दपुराणस्य केदारखण्डे एकादशाध्यायेष्वस्य वैशिष्ट्यं वर्णितं विद्यते। अस्य प्रथमं वैशिष्ट्यमस्ति अलकनन्दा-भागीरथ्योः सङ्गमः।[१] अलकनन्दा-भागीरथ्योः सङ्गमेन गङ्गायाः प्रादुर्भावः अस्मादेव स्थानात् भवति। पुराणानुसारेण सङ्गमे अलकनन्दायां ब्रह्मकुण्डस्तथा भागीरथ्यां वसिष्ठकुण्डमस्ति। यत्र ब्रह्मणा तपः कृतम्। स्कन्दपुराणानुसारेण अनेन समं तीर्थं न भूतो न भविष्यति। तद्यथा-

**यत्र वै जाह्नवी साक्षादलकनन्दासमन्विता।**
**यत्र रामः स्वयं साक्षात्सीतश्च सलक्ष्मणः।।**

---

१. गङ्गाद्वारात्पूर्वभागे श्रीगङ्गाऽलकनन्दयोः।
सङ्गमो यत्र देशे तु देवप्रयागः तत्संज्ञकः।।
स्कन्दपुराणम्, केदारखण्डम्, अध्यायः १४९, श्लोकः २५

**तस्य तीर्थस्य माहात्म्यं वक्तुं को वा क्षमो भवेत्।**
**सममनेन तीर्थेन न भूतो न भविष्यति[२]।**

पुराणानुसारेण अस्य तीर्थस्य नाम देवशर्मनामकब्राह्मणस्य नामाधारेण कृतं स्वयं विष्णुना। देवशर्मब्राह्मणेन एकादशसहस्रवर्षपर्यन्तं भगवतः विष्णोः तपः कृतम्। अस्य तीर्थस्य अपरं वैशिष्ट्यमस्ति रघुनाथमन्दिरम्। पुराणानुसारेण श्रीरामेण रावणस्य वधः कृतः। तस्माद् ब्राह्मणस्य वधजनितपापाद्विमुक्त्यर्थं तेनात्र तपः कृतम्। रामस्य स्नानार्थमत्र रामकुण्डमद्याप्यस्ति।

### रघुनाथमन्दिरम्-

[३]रघुनाथमन्दिरं श्रीरामस्य वैष्णवमन्दिरं अस्ति। अस्य मन्दिरस्य निर्माणं आदिगुरुशङ्कराचार्येण सप्तमशताब्द्यां कृतमिति श्रूयते। पुरातत्त्वविभागेन पुरातात्त्विकसर्वेक्षणा-धारेणास्य कालः सप्तमशताब्द्यामेव स्वीकृतः। अत्र पाषाणे ये शिलालेखाः सन्ति ते गुप्तकालीनाः सन्ति। गुप्तकालः द्वितीयशताब्द्यारभ्य पञ्चमशताब्दिपर्यन्तमस्ति। अत इदमपि भवितुं शक्यते यत् मूर्तिस्थापनं गुप्तकाले तथा मन्दिरनिर्माणं शंकराचार्येण कृतम्। काले कालेऽस्य जीर्णोद्धारमपि जातम्।

### मन्दिरस्य वास्तुशास्त्रीयाध्ययनम् -

**भूमिचयनम्** - वास्तुकर्मणः प्रथमं सोपानं भवति भूमिचयनम्। बृहद्वास्तुमालानुसारेण ब्राह्मणवर्णस्य कृते भूमिचयनस्य ये सिद्धान्ताः सन्ति त एव सिद्धान्ताः देववास्तो कृतेऽपि अनुकरणीया अथवा यादृशी भूमिः ब्राह्मणवर्णस्य कृते शुभा भवति सैव मन्दिरनिर्माणार्थमपि स्वीकरणीया। यथा-

**भूमयोः ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि।**
**ता एव तेषां शस्यन्ते देवतायनेष्वपि[४]।**

देवप्रयागः गृध्राञ्चल-दशरथाञ्चल-नृसिंहाञ्चलपर्वतश्चेति त्रयाणां पर्वतानां मध्ये स्थितमस्ति। रघुनाथमन्दिरं देवप्रयागस्य गृध्राञ्चलपर्वतोपरि निर्मितमस्ति। तत्र नृसिंहाञ्चल-दशरथाञ्चलयोः भूमिः मृदा-सिकतोपेता (रेत) अस्ति। यथा प्रत्यक्षरूपेणापि दृश्यते नृसिंहाञ्चलपर्वतोपरि श्रीरघुनाथकीर्ति परिसरस्य निर्माणकार्यं प्रचलति। दशरथाञ्चलपर्वतोपरि

---

२. स्कन्दपुराणम्, केदारखण्डम्, अध्यायः १४९, श्लोकः २५

३. देवातायनं कुर्याद्धर्मार्थकाममोक्षदम्।
देवानां स्थापनं पूजा पापहृद्दर्शनादिकम्।
धर्मवृद्धिर्भवेदथः कामो मोक्षस्ततो नृणाम्।। प्रासादमण्डनम् प्रथमोऽध्यायः श्लोकः १,२

४. बृहद्वास्तुमाला, प्रासादलक्षणानि श्लोकः -९

यद्राजमार्गमस्ति तस्मिन् सदैव भूस्खलनं भवति, अतः एतादृशी भूमिः वास्तुशास्त्रदृष्ट्या शुभा ना भवति।

**स्फुटिता सशल्या च वल्मिकाऽऽरोहिणि तथा।**
**दूरतः परिहर्तव्या कर्तुरायुर्धनापहा।।**[1]

**पङ्कसङ्करकूपैश्च दारुभिर्लोष्टकैरपि।**
**शर्कराभिरयुक्ता या भस्माद्यैस्तु तुषैरपि।।**[2]

गृध्राञ्चलपर्वतः शिखरात् मूलपर्यन्तं कृष्णपाषाणस्य पर्वतोऽस्ति। अस्य अधोभागे अलकनन्दा-भागीरथ्योः संगमः अस्ति। संगमस्याकारः गृध्रस्य चञ्चुवदस्ति। अस्योपरि यः राजमार्गः अस्ति तस्मिन् कदापि भूस्खलनं न भवति। अतः वास्तुशास्त्रदृष्ट्या भूमिः सर्वोपयुक्ता सर्वश्रेष्ठा सुरक्षिताश्चास्ति। पर्वतं कर्तयित्वा मन्दिरस्याधारः निर्मितोऽस्ति। मन्दिरस्य भूखण्डः वर्गाकारः अस्ति। वास्तुशास्त्रानुसारेण देवानां ब्राह्मणानां कृते वर्गाकारा तथा आयताकारा तथा दक्षिणपश्चिमयोर्दिशो उन्नता भूमिः प्रशस्ता भवति।

**देवानां तु द्विजातीनां चतुरस्त्रायताः श्रुताः।**
**वस्त्वाकृतिरनिन्द्या सवाक्प्रत्यदिक्समुन्नताः।।**[3]

रघुनाथमन्दिरं नगरस्योत्तरदिशि वर्तते। मयमतानुसारेण विष्णुमन्दिरं ग्रामस्य नगरस्य वा उत्तरभागे पश्चिमभागे वा भवति। यथा -

**ब्रह्मस्थानैशाने वाग्नेयां वा सभास्थानम्।**
**तदुदक्पश्चिमभागे हरिसदनं दक्षिणे परतः।।**[4]

**शैली -**

देवप्रयागस्थरघुनाथमन्दिरं नागरशैल्यां निर्मितमस्ति। भारतवर्षे मन्दिरनिर्माणस्य तिस्रः शैल्यः प्रसिद्धाः सन्ति। नागरशैली, वेसरशैली, द्रविडशैली चेति। एतासु द्रविडशैली दक्षिणभारते, नागरशैली उत्तरभारते तथा वेसरशैली विन्ध्यपर्वत-कृष्णानद्योः मध्यवर्तिभागेषु प्रसिद्धा अस्ति। वेसरशैली नागर-द्राविडशैल्योः सम्मिलितस्वरूपमस्ति। उत्तरभारते मध्यभारते चास्याः शैल्याः प्रसारोऽस्ति। नागरशब्दः नगरशब्देन निर्मितोऽस्ति। सर्वप्रथमं नगरे मन्दिरनिर्माणार्थं प्रयुक्तत्त्वान्नागरमिति संज्ञा कृता।

---

१. बृहद्वास्तुमाला, भूमेर्लक्षणानि, श्लोकः ७९
२. मयमतम्, तृतीयोऽध्यायः श्लोकः -९
३. मयमतम्, तृतीयोऽध्यायः श्लोकः -१
४. मयमतम्, नवमोऽध्यायः श्लोकः ७४

वास्तुशास्त्रानुसारेण नागरशैल्यां निर्मितमन्दिराणाम् आधारतः शिखरपर्यन्तं विशिष्टा शैली भवति। नागरवास्तुकलायां निर्मितानि मन्दिराणि वर्गाकाराणि भवन्ति। शिल्प-शास्त्राणामनुसारेण अस्यां शैल्यां निर्मितानां मन्दिराणामष्टौ प्रमुखान्यङ्गानि भवन्ति।

१. अधिष्ठानम् - मन्दिस्य मूलभागः यस्योपरि मन्दिरं निर्मितं भवति।

२. मसूरकः -आधारः (नीव)

३. जङ्घा - मन्दिरस्य भित्तयः, विशेषरूपेण गर्भगृहस्य भित्तयः।

४. शिखरम् - मन्दिस्य शीर्षभाग अथवा गर्भगृहस्योपरिभागः।

५. आमलकम् - शिखरस्य वर्तुलाकारः शीर्षभागः यस्योपरि कलशः स्थितो भवति।

६. कलशः -शिखरस्य शीर्षभागः यत्र कलशः भवति।

७. ग्रीवा - शिखरस्योपरितनः तिर्यग्भागः।

८. कपोतः - द्वारस्य, भित्त्या स्तम्भस्य वा गर्भगृहस्योपरिभागेन संलग्नो भागः।

वास्तुशास्त्रदृष्ट्या रघुनाथमन्दिरस्य बहवः भागाः सन्ति। तत्र बाह्यभागाः अनेन प्रकारेण सन्ति -

**१. अधिष्ठान० जगती वा**- मन्दिरस्याधारः कृष्णपाषाणयुतः पर्वतोऽस्ति। पर्वतस्य कर्तनं कृत्वा वर्गाकारभूमिः अस्याधारोऽस्ति। प्रासादमण्डनानुसारेण मन्दिरस्याधिष्ठानं वर्गाकारमायताकारं वा भवति।[1]

**२. पीठम्**- आधारोपरि निर्मितोऽयं भागः प्रायः हस्तत्रयमितः वर्तते। अस्योपरि मन्दिरस्य भित्तयः निर्मिताः सन्ति। प्रासादमण्डने मन्दिरस्य प्रमाणानुसारेण पीठस्य मानं प्रतिपादितम्।[2]

**३. अधोजङ्घा**-मन्दिरस्य भागोऽयं सभामण्डपस्याधारो वर्तते।

**४. ऊर्ध्वजङ्घा**-भागोऽयं गर्भगृहस्याधारो वर्तते।

---

१. प्रासादस्याधिष्ठानं जगती सा निगद्यते।
यथा सिंहासनं राज्ञां प्रासादस्य तथैव वा।।
चतुरस्यायताष्टस्रा वृत्ता वृत्तायता तथा।
जगती पञ्चधा प्रोक्ता प्रसादस्यानुरूपतः।।
प्रासादमण्डनम्, द्वितीयोऽध्यायः, श्लोकः १- २

२. पीठमर्धं त्रिपादांशौरेवं द्वित्रिकरे गृहे।
चतुर्हस्ते त्रिसार्धांशं दापाशं पञ्चहस्तके।।
दशविंशतिषट्त्रिंशच्च शतार्द्धं हस्तकावधि। प्रासादमण्डनम्, द्वितीयोऽध्यायः, श्लोकः-४




५. **वरडिका**-प्रतिमायाः आधाररूपोऽयं भागः वर्तते। गर्भगृहे अस्योपरि श्रीरघुनाथस्य भव्यप्रतिमा स्थापिताऽस्ति।

६. **शिखरम्**-गर्भगृहस्योपरितनो भागः। गढ़वालीभाषायां भागोऽयं रथशब्देन व्याहृतः। अस्य द्वौ भागौ स्तः। कर्णरथः भद्ररथश्च। मध्यभागश्च भद्ररथः बाह्यभागश्च कर्णरथसंज्ञकः।

७. **आमलकम्**-आमलकफलसदृशो भागोऽयं शिखरस्योर्ध्वभागोऽस्ति शिखरस्योपरि वा स्थितमस्ति।

८. **ग्रीवा**-शिखरस्योपरितनः भागः ग्रीवाशब्देन ज्ञायते।

९. **कलशः**-शिखरस्य शीर्षभागोऽयमस्ति। अस्योपरि कलशः तस्योपरि च चक्रं स्थापितमस्ति। मन्दिरमिदं वैष्णवसम्प्रदायस्यास्त्यतः चक्रं स्थापितमस्ति।

१०. **छत्रम्**- अस्य मन्दिरस्य वैशिष्ट्यमस्तीदं यत् आमलकं छत्रेणावृतमस्ति। विशिष्टशैल्यां निर्मितमिदं छत्रं मन्दिरस्य शोभां वर्धयति। चन्दनकाष्ठेन निर्मितमिदं छत्रं उत्तराखण्डस्य विशिष्टां कत्यूरीशैलीमनुसरति। कत्यूरी उत्तराखण्डस्य राजवंश आसीत् येन उत्तराखण्डस्य गढ़वालकुमाऊँक्षेत्रोपरि एकादशशताब्द्यां शासनं कृतम्। तेषां छत्रनिर्माणस्य स्वकीया विशिष्टा शैली आसीत्। अतः छत्रमिदं मन्दिरस्य निर्माणानन्तरं वृष्ट्यादिभिः मन्दिरस्य रक्षणार्थं निर्मितम्।

११. **शुकनासः**-मन्दिरस्य मुखभागे शुकस्य नासावत् भागोऽयं पृथग्रूपेण निर्मितोऽस्ति।

१२. **घटीयन्त्रम्**-मन्दिरस्य मुख्यद्वारोपरि (मण्डपस्य द्वारोपरि) घटीयन्त्रं स्थापितमस्ति। स्थानीयनागरिकानामनुसारेण पूर्वं यन्त्रोऽयं सूर्याभिमुखं भ्रमति स्म परमिदानीमस्मिन् विकारः अस्ति।

यथा मानवस्य शरीरे विभिन्नान्यङ्गानि सन्ति तथैव मन्दिरस्याप्यङ्गानि कल्पितान्यस्माकं पूर्वाचार्यैः।

**आन्तरिकभागः** -

मन्दिरस्यान्तरिकभागः अर्धमण्डपम्, महामण्डपम्, अन्तरालः, गर्भगृहम् प्रतिमा चेति। तत्रादौ मन्दिरस्य मुख्यद्वारं सार्धद्वयहस्तमितं विस्तृतं पञ्चहस्तमितमुच्चं वर्तते।

**मण्डपम्** - मण्डपस्य चतुःस्तम्भाः सन्ति। चतुःस्तम्भानां मध्यवर्तिभागः महामण्डपं तथा स्तम्भद्वारयोः मध्यभाग अर्धमण्डपसंज्ञकमस्ति।

**अन्तरालः** - महामण्डपाग्रे अन्तराल अस्ति। अन्तरालः गर्भगृह-महामण्डपयोः मध्यभागः प्रायशः त्रयहस्तात्मको अस्ति।

**गर्भगृहम्** - गर्भगृहं मन्दिरस्य मुख्यभागोऽस्ति। अस्य मध्यभागे भगवतः श्रीरघुनाथस्य सप्तहस्तमिता प्रतिमा स्थिताऽस्ति। श्रूयते यत् एषा प्रतिमा पर्वतं कर्तयित्वा निर्मिता अस्ति।

वराहमिहिराचार्येण बृहत्संहिताग्रन्थस्य प्रासादलक्षणाध्याये प्रासादस्य लक्षणान्यनेन प्रकारेण प्रतिपादितानि-

**यो विस्तारो भवेद्यस्य द्विगुणा सत्समुन्नतिः।**
**उच्छ्रायाद्यस्तृतीयांशस्तेन तुल्या कटिः स्मृता।।**
**विस्ताराद्धं भवेद्गर्भो भित्तयोऽन्याः समन्ततः।।**
**गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम्।।**[1]

इत्युक्ते मन्दिरस्य यः विस्तारः भवेत्तस्य द्विगुणं तस्य उन्नतिः भवेत्। उन्नतेस्तृतीयभागमिता कटिः भवेत्। विस्तारस्यार्द्धभागे गर्भगृहं स्यात् तथा शेषभागे भित्तिः स्यात्। गर्भगृहस्य चतुर्थांशमितं द्वारस्य विस्तारः तथा तस्य द्विगुणमस्य उन्नतिः स्यात् द्वारस्योन्नतितुल्यं शाखा तथा उदुम्बरस्य विस्तारः भवति। शाखायाः चतुर्थांशतुल्यं तस्य बाहुल्यं स्यादिति।

रघुनाथमन्दिरस्य विस्तारः द्वात्रिंशद्धस्तमितः अस्ति। उक्तनियमानुसारेण मन्दिरस्य चतुःषष्टीहस्तमितमुन्नतिः, एकविंशतिहस्तमितं कटिभागः, विस्तारस्यार्द्धं गर्भगृहं षोडषहस्तमितम्, चतुर्हस्तमितं गर्भगृहस्य भित्तिः, चतुर्हस्तमितं गर्भगृहस्य द्वारं तथा तस्य द्विगुणमष्टहस्तमितं द्वारस्योन्नतिः भवेत्। प्रायोगिकाध्ययनेन ज्ञायते यत् मन्दिरस्य प्रमाणं बृहत्संहितानुसारेणैवास्ति परं गर्भगृहस्य द्वारं चतुर्हस्तमितं नास्ति। इदमपि भवितुं शक्यते यत् जीर्णोद्धारकाले द्वारस्य भित्ती अग्रे वर्धितौ स्याताम्। एवं प्रत्यक्षदर्शनेऽप्यनुभूयते।

---

१. बृहत्संहिता, प्रासादलक्षणाध्यायः ११- १६

**प्रतिमाप्रमाणम्** -

**द्वारमानाष्टभागोना प्रतिमा स्यात्सपिण्डिका।**
**द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका:।**[१]

वास्तुशास्त्रानुसारेण द्वारस्य मानमष्टभागोनं सपिण्डं प्रतिमाया: प्रमाणं (उन्नति:) भवेत्। पिण्डशब्द: पीठस्य कृतेऽस्ति। एतद् सिद्धान्तानुसारेण द्वारस्योन्नति अष्टहस्त-मितमस्ति। अस्याष्टमांश: एकं हस्तम्, अष्टमांशोनं द्वारप्रमाणं सप्तहस्तानि। अङ्गुलात्मक-करणेन ७ गुणित: २४=१६८/३=५६, १६८-५६=११२/२४=४.६६ प्रतिमाप्रमाणमिति। मन्दिरस्य गर्भगृहे बर्हिर्जनानां प्रवेश: वर्जित अस्ति तथापि मण्डपावलोकनेन ज्ञायते यत् अस्या: प्रतिमाया: प्रमाणं पञ्चहस्तासन्नमस्ति। यतो हि अत्र य: पूजक: अस्ति तस्योन्नति: सार्धचतुर्हस्तासन्नमस्ति। यदा स: प्रतिमाया: समक्षे भवति तदा प्रतिमाया: किञ्चिदध: तिष्ठति।

सारांशोऽयं विद्यते यत् देवप्रयागस्थश्रीरघुनाथमन्दिरं वास्तुशास्त्रसम्मतमस्ति। वास्तुशास्त्रे श्रेष्ठभूम्या: यानि लक्षणानि सन्ति तानि सर्वाणि मन्दिरस्य भूमौ वर्तन्ते। नागरशैल्या सर्वाणि लक्षणानि अस्मिन् सन्ति। अधिष्ठान-पीठ-जङ्घा-वरण्डिका-शिखर-आमलक-ग्रीवा-छत्र-मण्डप-गर्भगृह-अन्तराल-प्रतिमाप्रमाणादय: वास्तुशास्त्रानुगुणं वर्तन्ते। छत्रं उत्तराखण्डस्य किञ्चद्विशिष्टां कत्यूरीशैलीमनुसरति। येन मन्दिरस्य शोभा वर्धते।

---

१. बृहत्संहिता, प्रासादलक्षणाध्याय: ११- १६

# देवप्रासादनिर्माणे भूमिचयनविधानम्

**-डॉ. मुकेशकुमारः**

सहायकाचार्यः, ज्योतिषविभागः

सनातनधर्म-आदर्शसंस्कृतमहाविद्यालयः

डोहगी, ऊना, हिमाचलप्रदेशः

भोजनाद्यनन्तरं प्राणिजगतः सर्वप्रमुखा आवश्यकताआवास एवास्तीत्यत्र नास्ति संशीतिः। मानवसभ्यतायाः विकासेन सहैवस्वीयाराध्यस्य ध्यानोपासना-अर्चनादिनिमित्तम् अत्यन्तं पवित्रस्थलानां व्यवस्थितक्रमेण निर्माणस्यारम्भः अभूदिति वेदेषु विद्यमानज्ञानेन स्पष्टीभवति। सहस्रशः वर्षेभ्यः प्रागेव अस्मत्पूर्वजाः देवालयनिर्माणस्य वैज्ञानिकस्वरूपम् अवगत्य संसारे विद्यमानमानवसमुदायनिमित्तं च तन्महत्त्वम् अवगत्य तत्स्वरूपं कीदृशं भवेदित्यादिकं सूक्ष्मातिसूक्ष्मं चिन्तनं विधाय विविधग्रन्थेषु न्यरूपयन्। यद्यपि तत्तद्देशानां भौगोलिक-सामाजिकपरिस्थित्यनुसारं देवप्रासादस्वरूपेऽपि ईषत्परिवर्तनं समागतमेव, तथापि शिल्पशास्त्रीयग्रन्थेषु निरूपिताः देवालयवास्तोः वेदी-शिखर-द्वार-गर्भगृहादयः सार्वभौमिक-सिद्धान्ताः भौगोलिकस्थित्यनुसारं किञ्चित्प्रमाणेन वा सर्वत्र दृग्गोचराः भवन्ति इति। देवप्रासादनिर्माणस्य प्रयोजनं किम्? कुत्रदेवालयनिर्माणं विधेयमित्यादिविषयाणां सूक्ष्मतया शास्त्रीयदृष्ट्या विश्लेषणमेवात्र सविस्तरं विधीयते।

### देवालयनिर्माणस्य प्रयोजनम्-

**देवतायतनं कुर्याद् यशोधर्माभिवृद्धये**[१]। इति त्रिस्कन्धज्ञाचार्यवराहमिहिर-भणित्यनुसारं यशसः धर्मस्य चाभिवृद्धये देवालयनिर्माणमवश्यं विधेयमिति। तस्मादेव पुरा राजानो धर्मादिपुरुषार्थानां सिद्धये यशःप्राप्तये च स्थाने स्थाने देवालयनिर्माणे उत्साहदर्शिनः आसन्। देवप्रासादरचनायाः कारणान्तराण्यपि बहुविधानि सन्ति। यथा हि सौरशक्त्यापेक्ष्या देवालयान्तः विद्यमाना सात्त्विकशक्तिः अधिकशक्तिशालिनी भवतीति विज्ञानसम्मतः सिद्धान्तः। कश्चनपि मानसिकरूपेण अशान्तजनविशेषः सर्वविधासक्त्यादिकं परित्यज्य देवालयस्य अन्तः उपविशति, मानसिकरूपेण देवं स्वदशादिकं निवेदयति, ततश्च शान्तिं समवाप्य सकारात्मिकामूर्जां समधिगत्य स्वजीवनचर्यां निर्वहति। अनुसन्धातृणाम्

---

१. बृहत्संहिता, प्रासादलक्षणाध्यायः - १

अयमप्यभिप्रायः वर्तते यत् मन्दिरस्यान्तः उपवेशनेन साधनया च अनुकूलं पर्यावरणं निर्मितं भवति येन अनारोग्यं नश्यति, मानसिक-शारीरिकसन्तुलनं सिद्ध्यति इति।

अपरपक्षे धर्मार्थकाममोक्षेषु पुरुषार्थचतुष्टयेषु अर्थ-कामयोः सिद्धिः धर्मद्वारेणैव संसिद्ध्यति तस्माद् धार्मिककार्याणि सततं विधातुं प्रेरयन्ति धर्मादिशास्त्रपरम्पराः। **"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्"**[१] इति श्रुत्यनुसारं यद्यपि विश्वस्य सर्वस्मिन् अपि कणे ईश्वरविद्यमानता अस्ति, तथापि ईश्वरविषयकध्यानार्थं मनसः एकाग्रतार्थं च विग्रहस्वरूपस्य देवस्य स्थापनार्थं ततश्च अर्चना-साधना-उपासनार्थं पवित्रस्थानस्य देवालयरूपेण परिकल्पनम् अस्मदीयसंस्कृतेः एव प्रमुखाङ्गभूतमित्यतः देवालयनिर्माणस्य महत्प्रयोजनं सिद्ध्यति। सुप्रसिद्धवैज्ञानिकस्य एल.तूरेनेवर्यस्य कथनमस्ति यत् गोलाकाराणां पूर्णतया पिहितछदीनां देवालयानां महद्वैशिष्ट्यं भवति। इमानि भवनानि विविधप्रकारकान्ब्रह्माण्डीयतरंगान् आकृष्य स्वप्रभावं भक्तस्य शरीरे मनसि च अवश्यं स्थापयन्ति।"[२] प्रायः तस्मादेव अधिकाधिकदेवालयानां स्वरूपं तादृशमेव भवति यत्र छदि गोलाकाररूपा पूर्णतया पिहिता भवति। देवालयस्वरूपं तत्तद्भौगोलिक-सामाजिक-परिस्थित्यनुसारं भवितुमर्हति तद्यथोच्यते -

**स्वशक्त्या काष्ठमृदिष्टका शैलधातुरत्नाजम्।**
**देवतायतनं कुर्याद् धर्मार्थकाममोक्षदम्।।**[३] **इति**

किञ्च यज्ञयागादिना अलौकिकफलं यल्लभ्यते यच्च वापी-कूपादिरचनया लोककल्याणरूपं लौकिकफलं सम्प्राप्यते तद्द्वयमपि युगपदेव देवालयनिर्माणेन सम्भवतीत्युच्यते वराहमिहिरेण -

**इष्टापूर्तेन लभ्यन्ते ये लोकास्तान् बुभूषता।**
**देवानामालयः कार्यो द्वयमप्यत्र दृश्यते।।**[४]

इदमेव आचार्यकाश्यपोऽप्यभिप्रैति यत् देवालयनिर्माणेन सर्वविधान्यपि शुभफलानि लभ्यन्ते तस्मादवश्यमेव देवालयनिर्माणं श्रेयमिच्छता जनेन कार्यमिति।[५]

---

१. ईशावास्योपनिषद् - १
२. वेव्स फ्रॉम फॉर्मस - एल. तूरेने।
३. प्रासादमण्डन्, १-३३
४. बृहत्संहिता, प्रासादलक्षणाध्यायः - २
५. इष्टापूर्तादिभिर्यज्ञैर्यावत् कुर्वन्ति मानवाः।
अग्निष्टोमादिपशुभिरिष्टं यज्ञं प्रकीर्तितम्॥
वापीकूपतडागादिदेवतायतनानि च।
स्वर्गस्थितिं सदा कुर्यात् तद्दानं पूर्तसंज्ञितम्॥
देवानामालयः कार्यो द्वयमप्यत्र लभ्यते। बृहत्संहिता, भट्टोत्पलटीका।

## देवप्रासादनिर्माणे भूमिचयनम्

देवप्रासादनिर्माणात्प्राक् शास्त्रेषु निरूपितदेवप्रसङ्गाधारेण इदमवश्यं ज्ञातव्यं यद्देवेभ्यः यत्प्रियकरं स्थानस्ति तादृशे एव स्थाने देवप्रासादनिर्माणं विधेयमिति। तद्विषये इत्थमभाणि आचार्यवराहेण यत् सलिलयुक्तेषु पुष्पादिसंयुक्तोद्यानादियुक्तेषु शुद्धवायुसम्पूरितेषु- प्राकृतिकेषु स्वनिर्मितेषु चोत्तमोत्तमस्थानेष्वेव देवताः सान्निध्यं यान्तीति।[१] अन्यच्च हंसस्कन्धैः दूरं नीतानां कल्हारपुष्पाविशेषाणां वीथीद्वारा यज्जलं निर्मलीक्रियते तादृशेषु जनयुक्तस्थानेषु, हंस-कारण्डव-क्रौञ्च-चक्रवाकादिपक्षिणां ध्वनियुक्तेषु सरस्सु च नित्यं देवता रमन्ते इति।[२] इदमेव समर्थयति महर्षिः काश्यपोऽपि -

**हंसकारण्डवाकीर्णाः कोकिलालापनादिताः।**
**षट्पदागीतमधुरा नृत्यद्भिः शिखिभिर्युताः।।**
**तत्र देवा रतिं यान्ति सान्निध्याद् नित्यसंस्थिताः।**[३] इति।

एवमेव येषु नदितटेषु पुष्पिताः वृक्षविशेषाः चकासन्ते, क्रौञ्चपक्षीणां राजहंसानां च मधुरस्वरः, मत्स्यविशेषाणां जलकेलिश्च अनवरतं यत्र प्राणिमनांसि आह्लादयति तादृशासु सरित्स्वपि नित्यं देवता रमन्ते इति।[४]

अन्यच्च वनसमीपवर्तिसुन्दरप्रदेशेषु प्रपातसमीपवर्तिक्षेत्रे नदीषु, पर्वतेषु, नगरेषु, उद्यानयुक्तेषु स्थानेषु एव देवताः नित्यं रमन्ते इत्युक्तमस्ति।[५] अस्य साक्षादुदाहरणान्यपि अवलोकयितुं शक्यानि। विशिष्य पर्वतीयक्षेत्रेषु प्रायः सर्वस्यापि उन्नतशिखरस्योपरि देवस्थानमवश्यं दृश्यते। यद्यपि कालान्तरे तत्तद्देवतानां पूजार्थं ग्रामसमीपे समतलभूमौ वा

---

१. सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च।
स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः॥

२. सरःसु नलिनीछत्रनिरस्तरविरश्मिषु।
हंसांसाक्षिप्तकह्लारवीथीविमलवारिषु॥
हंसकारण्डवक्रौञ्चचक्रवाकविराविषु।
पर्यन्तनिचुलच्छायाविश्रान्तजलचारिषु॥ बृहत्संहिता, प्रसाद. - ३, ५

३. बृहत्संहिता, (८ श्लोकस्य भट्टोत्पलटीकायाम्)

४. क्रौञ्चकाञ्चीकलापाश्च कलहंसकलस्वराः।
नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः॥
फुल्लतीरद्रुमोत्तंसाः सङ्गमश्रोणिमण्डलाः।
पुलिनाभ्युन्नतोरस्या हंसहासाश्च निम्नगाः॥ बृहत्संहिता ५४.६-७

५. वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु।
रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च॥ बृहत्संहिता ५४.८

मन्दिराणि निर्मितानि परन्तु मूलमन्दिराणि अत्युन्नतशिखरेषु सन्त्येव। हिमाचलप्रदेशस्य हिमानीचामुण्डा, किन्नरकैलाशः, श्रीखण्डमहादेवादीनि देवस्थानानि प्रसिद्धान्येव। भारते विद्यमानानि प्रमुखमन्दिराणि अपि नदि-प्रपातादिसमीपवर्तिक्षेत्रेष्वेव निर्मितानि सन्ति पूर्वजैरित्यत्र नास्ति संशीतिः। अमुमेव विषयम् इत्थं स्पष्टयति प्रासादमण्डनकारः -

**नद्यां सिद्धाश्रमे तीर्थे पुरे ग्रामे च गह्वरे।**
**वाटी वापी तडागादिस्थाने कार्यं सुरालयम्।।**[१]

अत्रायमर्थः यत् नदीतटेषु सिद्धाश्रमाणां तीर्थानां बृहत्पुरीणां नगराणां पर्वतगह्वराणां वाटिकानां वापी-जलाशयादीनां च समीपवर्तिषु पवित्रस्थानेषु देवालयनिर्माणं शुभं भवति। यतः शुभस्थानेषु सकारात्मिका ऊर्जा अत्यधिकपरिमाणेन भवति अत एव एतानि स्थालानि देवप्रासादनिर्माणे प्रशस्यानि इति आचार्यकथनम्।

**देवालयनिमित्तमुत्तमभूमिः-**

**भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि।**
**ता एव तेषां शस्यन्ते देवतायतनेष्वपि।।**[२]

"ब्राह्मणी भूः कुशोपेता....." इत्यादिना बृहत्वास्तुमालायां "सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते..." इत्यादिना च बृहत्संहितायां प्रोक्तरीत्या ब्राह्मणक्षत्रियवैश्यशूद्राणां या भूमयो वास्तुकर्मणि कथिताः ताः एव भूमयः देवप्रासादनिर्माणे अपि प्रशस्यन्ते इति। विप्रादिभूमिलक्षणानि एवमुक्तानि बृहत्संहितायाः ५२ तमे अध्याये- **"गन्धश्च भवति यस्यां घृतरुधिरान्नाद्यमद्यसमः। कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही। अनुवर्णं वृद्धिकरी मधुरषायाम्लकटुका च।"**[३]

**भूमिपरीक्षणम् -**

देवालय-प्रासाद-ब्राह्मणादिवर्णानां कृते या भूमिः प्रशस्तेति निरूपिता सा चतुरस्राकारा आयताकारा वा स्याद्, निन्दिताकृतिरहिता अदोषा पश्चिम-दक्षिणदिग्भ्यां च समुन्नता स्यादिति प्रासादमण्डने देवालयभूमिनिश्चयात्प्राक् कानिचनपरीक्षणानि निरूपितानि सन्ति।[४]

---

१. प्रसादमण्डनम्, १.३२
२. बृहत्संहिता, प्रासादलक्षणाध्यायः - ८
३. बृहत्संहिता, ५२ - ९४, ९५
४. देवानां तु द्विजातीनां चतुरश्रायताः श्रुताः।
वस्त्वाकृतिरन्द्या सावाक्प्रत्यग्दिक्समुन्नता॥ प्रसादमण्डनम्, 1-32

### वृक्ष-स्वर-वर्णारुच्याद्यनुसारं परीक्षणक्रमः-

यस्यां भूमावाघातेन अश्व-गज-वेणु-वीणा-जल-दुन्दुभिसदृशः ध्वनिः समुत्पद्येत यस्याश्च पुन्नाग-कमल-धान्य-पाटलपुष्पादीनां सुगन्धः प्रसरेत सा भूमिः निश्चयेन श्रेष्ठा इति श्रेष्ठभूमेः लक्षणानि ज्ञात्वैव देवालयनिर्माणार्थं यतनीयम्।[१]

एवमेव यस्याः भूमेः पशुगन्धः प्रसरति या च समतला सती सर्वविधबीजाङ्कुरणे समर्था स्यात् तादृशी एकवर्णा स्निग्धा देवप्रासादयोग्या मन्तव्येति वास्तुशास्त्रविदामभिप्रायः। [२]यस्यां भूमौ बिल्व-निम्ब-निर्गुण्डी-पिण्डित-सप्तवर्णक-आम्रवृक्षाः भवेयुः सा समस्थला भूमिः निश्चयेन देवप्रासादनिर्माणार्थं श्रेष्ठा भवति इति। एवमेव श्वेत-रक्त-पीत-कृष्ण-कपोत-वर्णयुक्ता तिक्त-कटु-कषाय-लवण-अम्लीयरुच्यादिषड्रसयुक्ता भूमिः निश्चयेन उत्तमा भवतीति अवगन्तव्यम्। [३]देवप्रासादनिर्माणार्थं भूमिचयनसन्दर्भे भूमिः यदि प्रदक्षिणक्रमेणवहता जलेनावृता शुभवर्णा गन्ध-रसपूर्णा च स्याच्चेदपि शुभदायिका भवतीति मयमतम्।[४]

इत्थं वेदेभ्यः या ज्ञानधारा निसृताः तस्याः कथञ्चिदप्यन्वयः समग्रे विश्वे दृश्यत एव। यथा भूमिचयनादिप्रक्रियाः सनातनधर्मानुसारं निरूपिताः सम्प्रदायान्तरोपासकैरपि तथाविधं कर्तुं प्रयासाः विधीयन्ते। उदाहरणार्थं सिक्खानां गुरुद्वारसमीपे वापी नास्ति चेत् अन्तः एव वाप्यादिनिर्माणार्थं यत्नः क्रियते इत्यादिकम्। एवमेव श्रद्धायाः केन्द्रभूतानां देवालयानां निर्माणक्रमे वास्तुशास्त्रीयविधानानां सम्यगध्ययनं विधाय एव देवप्रासादनिर्माणार्थं यतनीयमिति सारः।

### सन्दर्भग्रन्थसूची

१. बृहत्संहिता, अच्युतानन्दझा, चौखम्बा सुरभारती प्रकाशन, वाराणसी
२. प्रासादमण्डनम्, श्रीकृष्णजुगनू, परिमलपब्लिकेशन्स प्राइवेट लिमिटेड, २००५
३. मयमतम्, डा. शैलजापाण्डेय, चौखम्बा सुरभारती प्रकाशन, वाराणसी
४. वास्तुकर्मप्रकाशः, महर्षि अभयकात्यायन, चौखम्बा सुरभारती प्रकाशन, वाराणसी

---

१. हयेभवेणुवीणाब्धिदुन्दुभिध्वनिसंयुता।
पुन्नागजातिपुष्पाब्जधान्यपाटलगन्धकैः॥ मयमतम्- 3/2

२. पशुगन्धसमा श्रेष्ठा सर्वबीजप्ररोहिणी।
एकवर्णा घना स्निग्धा सुश्तसंस्पर्शनान्विता॥ मयमतम्- 3/3

३. बिल्वो निम्बश्च निर्गुण्डी पिण्डितः सप्तवर्णकः।
सहकारश्च षड्वृक्षेरारूढा या समस्थला॥ मयमतम्- 3/4

४. प्रदक्षिणोदकृतवती वर्णगन्धरसैः शुभा।
पुरुषाञ्जलिमात्रे तु दृष्टतोया मनोरमा॥ मयमतम्-1/8